श्रीमहादेवउवाच ॥ अथ वक्ष्ये पातु
कस्यं जगद्गुरोः ॥ यस्यस्मरणमात्रेण जीवन्मुक्तो भ
वेन्नरः ॥१॥ शृणु देवि प्रवक्ष्यामि सावधानावधार
य ॥ नारदोऽस्य ऋषिर्देवि छन्दोऽनुष्टुबुदाहृतम् ॥२॥
देवता बालकृष्णश्च चतुर्वर्गप्रदायकः ॥ शिरोमेबा
लकृष्णश्च पातु नित्यं मम श्रुती ॥ ३ ॥ नारायणः
पातु कंठं गोपीवन्द्यः कपोलकम् ॥ नासिके मधुहा पा
तु चक्षुषी नन्दनन्दनः ॥ ४ ॥ जनार्दनः पातु दन्तान
धरं माधवस्तथा ॥ ऊर्ध्वोष्ठं पातु वाराहश्चिबुकं केशि

सूदनः ॥ ५ ॥ हृदयंगोपिकानाथो नाभिं मेतु श्रः
सदा ॥ हस्तौगोवर्द्धनधरः पादौपीताम्बरोऽवतु
॥ ६ ॥ कराङ्गुलीः श्रीधरो मे पादाङ्गुल्य कृपामयः ॥
लिङ्गंपातुगदापाणिर्बालक्रीडामनोर ः ॥ ७ ॥
जगन्नाथः पातुपूर्वं श्रीरामोऽवतुपश्चिमम् ॥ उत्तरं
कैटभारिश्च दक्षिणंहनुमत्प्रभुः ॥ ८ ॥ आग्नेय्यां
तुगोविन्दो नैऋत्यांपातुकेशवः ॥ वायव्यां पातु ...न्या
रिरैशान्यांगोपनन्दनः ॥ ९ ॥ ऊर्ध्वं मे कृ...

रिरधःकैटभमर्द्दनः ॥ शयानंपातुपुण्डरीकाक्षोगोपा
तुश्रियःपतिः ॥ १० ॥ शेषःपातुनिरालम्बजाग्र
द्भावेह्यपांपतिः ॥ भोजनेकेशिहापातुकृष्णः स
र्वाङ्गसंधिषु ॥ ११ ॥ गणनासुनिशानाथोदिवा
नाथोदिनक्षये ॥ इतितेकथितंदिव्यंकवचंपरमा
द्भुतम् ॥१२॥ यःपठेन्नित्यमेवेदंकवचंप्रयतोनरः ॥
तस्याशुविपदोदेविनश्यन्तिरिपुसङ्कतः ॥ १३ ॥
अन्तेगोपालचरणंप्राप्नोतिपरमेश्वरि ॥ त्रिसन्ध्य
मेकसन्ध्यंवायःपठेच्छृणुयादपि ॥ १४ ॥ तस्य

वंद्दोरमानाथः परिपातिचतुर्भुजः ॥ अज्ञा… …
चंद्दादिगोपालं पूजयेद्यदि ॥ १५ ॥ सर्वंतस्य …
विजपहोमार्चनादिकम् ॥ सशस्त्रघातं संप्राप्य मृत्यु
र्नतिनसंशयः ॥ १६ ॥ इतिनारदपंचरात्रेज्ञानामृ
तसारेचतुर्थरात्रेगोपालकवचंनामसप्तमोध्यायः ॥



श्रीमद्गोपीजनवल्लभायनमः ॥ ॐ अस्यश्री
गोपालस्तोत्रमंत्रस्य श्रीनारदऋषिः ॥ अनुष्टुप्छं

श्री श्रीकृष्णःपरमात्मादेवता ॥ श्रीकृष्णप्रीत्यर्थं जपेविनियोगः॥अथध्यानम्॥सजलजलदनीलंद र्शितोदारशीलंकरतलधृतशैलंवेणुनादैरसालम्॥ व्रजजनकुलपालंकामिनिकेलिलोलं तरुणतुलसि मालंनौमिगोपालबालम् ॥ १ ॥ नारदउवाच ॥ नवीननीरदश्यामंनीलेंदीवरलोचनम्॥ बल्लवीनंद नंवंदेकृष्णंगोपालरूपिणम् ॥ २ ॥ स्फुरद्बर्हद लोद्बद्धनीलकुंतलमण्डितम्॥ कदंबकुसुमोद्बद्धवन मालाविभूषितम् ॥३॥ गंडमंडलसंसर्गिचलत्कां

चनकुंडलम् ॥ स्थूलमुक्ताफलोदारहारोद्योतितव
क्षसम् ॥ ४ ॥ हेमांगदतुलाकोटिकिरीटोज्वलविग्र
हम् ॥ मंदमारुतसंक्षोभिवलितांबरसंचयम् ॥५॥
रुचिरौष्ठपुटन्यस्तवंशीमधुरनिःस्वनैः ॥ लसद्गो
पालिकाचेतोमोहयंतंमुहुर्मुहुः ॥ ६ ॥ बल्लवीवद
नांभोजमधुपानमधुव्रतम् ॥ क्षोभयंतंमनस्तासांस
स्मेरापांगवीक्षणैः ॥ ७ ॥ यौवनोद्भिन्नदेहाभिः
संसक्ताभिःपरस्परम् ॥ विचित्रांबरभूषाभिर्गोपना

रसोत्सुकम् ॥ योधयंतंकचिद्गोपान्व्याहरंतंगवां
गणम् ॥ ९ ॥ कालिंदीजलसंसर्गिशीतलानिल
कंपिते ॥ कदंबपादपच्छायेस्थितंवृंदावनेकचित्
॥ १० ॥ रत्नभूधरसंलग्नरत्नासनपरिग्रहम् ॥
कल्पपादपमध्यस्थंहेममंडपिकागतम् ॥११॥ वसंत
कुसुमामोदसुरभीकृतदिङ्मुखे ॥ गोवर्द्धनगिरौर
म्येस्थितंरासरसोत्सुकम् ॥ १२ ॥ सव्यहस्ततले
न्यस्तगिरिवर्यातपत्रकम् ॥ खंडिताखंडितोन्मुक्त
मुक्तासारघनाघनम् ॥ १३ ॥ वेणुवाद्यमहोल्लास

कलहंसकलिकिःस्वनैः ॥ सवत्सैस्तन्मुखैःशब्दगोकुलै
रभिवीक्षितम् ॥ १४ ॥ कृष्णमेवानुगायद्भिस्तच्चे
ष्टावशवर्तिभिः ॥ दंडपाशोद्यतकरैर्गोपालैरुपशो
भितम् ॥ १५ ॥ नारदाद्यैर्मुनिश्रेष्ठैर्वेदवेदांगपार
गैः ॥ प्रीतिसुस्निग्धयावाचास्तूयमानंपरात्परम्
॥ १६ ॥ यएवंचिंतयेद्देवंभक्त्यासंस्तौतिमानवः॥
त्रिसंध्यंतस्यतुष्टोसौददातिवरमीप्सितम् ॥१७॥
राजवल्लभतामेतिभवेत्सर्वजनप्रियः ॥ अचलांश्रि
यमाप्नोतिसवाग्मीजायतेध्रुवम् ॥ १८ ॥ इतिश्री

नारदपंचरात्रे ज्ञानामृतसारे चतुर्थरात्रे गोपालस्त
वराजः संपूर्णः ॥ श्रीगोपालकृष्णार्पणमस्तु ॥

श्रीगणेशायनमः ॥ ॥ पार्वत्युवाच ॥ कैलास
शिखरेरम्येगौरीपृच्छतिशंकरम् ॥ ब्रह्मांडाखिल
नाथस्त्वंसृष्टिसंहारकारकः॥ १ ॥ त्वमेवपूज्यसेलो
कैर्ब्रह्मविष्णुसुरादिभिः ॥ नित्यंपठसिदेवेशकस्य
स्तोत्रंमहेश्वर ॥ २ ॥ आश्चर्यमिदमत्यंतंजायतेम

गोपा० ॥६॥

[illegible]कोभगवान्नंदगोपवरोद्यतः ॥ ध[illegible]रूपिणी
मातायशोदानंददायिनी ॥ १३ ॥ द्वाभ्यांप्रयाचि
तोनाथोदेवक्यांवसुदेवतः ॥ ब्रह्मणाभ्यर्थितोदेवो
देवैरपिसुरेश्वरि ॥१४॥ जातोऽवन्यांमुकुंदोऽपिमुर
लीवेदरेचिका ॥ तयासार्द्धंवचःकृत्वाततोजातोम
हीतले॥१५॥संसारसारसर्वस्वंश्यामलंमहदुज्ज्व
लम् ॥ एतज्ज्योतिरहंवेद्यंचिंतयामिसनातनम् ॥
॥ १६ ॥ गौरतेजोविनायस्तुश्यामतेजःसमर्चयेत्॥ ॥६
जपेद्वाध्यायतेवापिसभवेत्पातकीशिवे ॥ १७ ॥

सब्रह्महासुंरापीचस्वर्णस्तेयीचपंचमः ॥ एतैर्दोषै
र्विलिप्येतततेजोभेदान्महेश्वरि ॥१८॥ तस्माज्ज्यो
तिरभूद्द्वेधाराधामाधवरूपकम् ॥ तस्मादिदंमहादे
विगोपालेनैवभाषितम् ॥ १९ ॥ दुर्वाससोमुनेर्मो
हेकार्तिक्यांरासमंडले ॥ ततःपृष्टवतीराधासंदेह
भेदमात्मनः ॥ २० ॥ निरंजनात्समुत्पन्नंमयाधी
तंजगन्मयि ॥ श्रीकृष्णेनततःप्रोक्तंराधायैनारदा
यच ॥ २१ ॥ ततोनारदतःसर्वंविरलावैष्णवास्त
था ॥ कलौजानंतिदेवेशिगोपनीयंप्रयत्नतः ॥२२॥

शठायकृपणायाथदांभिकायसुरेश्वरि ॥ ब्रह्महत्या
मवाप्नोतिनस्माद्यत्नेनगोपयेत् ॥ २८ ॥ ॥ अ
स्यश्रीगोपालसहस्रनामस्तोत्रमंत्रस्य ॥ श्रीनार
दऋषिः ॥ अनुष्टुप्छंदः ॥ श्रीगोपालोदेवता ॥ का
मोबीजम् ॥ मायाशक्तिः ॥ चंद्रः कीलकम् ॥ श्रीकृ
ष्णचंद्रभक्तिरूपफलप्राप्तये श्रीगोपालसहस्रनाम
जपेविनियोगः ॥ अथवा ॥ ॐऐंक्लीँ बीजं ॥ श्रीँ
ह्रीँ शक्तिः ॥ श्रीवृंदावननिवासः कीलकम् ॥ श्रीरा
धाप्रियंपरंब्रह्मेतिमंत्रः ॥ धर्मादिचतुर्विधपुरुषा

र्थसिद्धयर्थेजपेविनियोगः ॥ ॐक्लांअंगुष्ठाभ्यांन
मः ॥ ॐक्लींतर्जनी० ॥ ॐक्लूंमध्यमा० ॥ ॐक्लैंअ
नामिका० ॥ ॐक्लौंकनिष्ठि० ॥ ॐक्लःकरतलकरपृ
ष्ठाभ्यांनमः ॥ ॐक्लांहृदयायन० ॥ ॐक्लींशिरसे
स्वाहा ॥ ॐक्लूंशिखायैव० ॥ ॐक्लैंकवचायहुम्॥
ॐक्लौंनेत्रत्रयायवौ० ॥ ॐक्लःअस्त्रायफट् ॥ अ
थध्यानं ॥ कस्तूरीतिलकंललाटपटलेवक्षस्थले
कौस्तुभंनासाग्रेवरमौक्तिकंकरतलेवेणुंकरेकंकण
म् ॥ सर्वांगेहरिचंदनंसुललितंकंठेचमुक्तावलिं

पत्नीपरिवेष्ठितोविजयतेगोपालचूडामणिः ॥ १ ॥
फुल्लेंदीवरकांतिमिंदुवदनंबर्हावतंसप्रियं श्रीव
त्सांकमुदारकौस्तुभधरंपीतांबरंसुंदरम् ॥ गोपी
नांनयनोत्पलार्चिततनुंगोगोपसंघावृतंगोविंदंक
लवेणुवादनपरंदिव्यांगभूषंभजे ॥ २ ॥ इतिध्या
नं ॥ ॐक्लींदेवःकामदेवःकामबीजशिरोमणिः ॥
श्रीगोपालोमहीपालःसर्ववेदांतपारगः ॥ १ ॥ ध
रणीपालकोधन्यःपुंडरीकंसनातनम् ॥ गोपतिर्भू
पतिःशास्ताप्रहर्ताविश्वतोमखः ॥ २ ॥ आदिक

र्तामहाकर्तामहाकालःप्रतापवान् ॥ जगज्जीवो
जगद्धाताजगद्भर्ताजगद्वसुः ॥ ३ ॥ मत्स्योर्भी
मःकुह्रूभर्ताहर्तावाराहमूर्तिमान् ॥ नारायणो
हृषीकेशोगोविंदोगरुडध्वजः ॥ ४ ॥ गोकुलें
द्रोमहाचंद्रःशर्वरीप्रियकारकः ॥ कमलामुखलो
लाक्षःपुंडरीकशुभावहः ॥ ५ ॥ दुर्वासाःकपिलो
भौमःसिंधुसागरसंगमः ॥ गोविंदोगोपतिर्गोत्रः
कालिंदीप्रेमपूरकः ॥ ६ ॥ गोपस्वामीगोकुलेंद्रो
गोवर्धनवरप्रदः ॥ नंदादिगोकुलत्रातादातादारि

ध्यभंजनः ॥ ७ ॥ सर्वमंगलदाताचसर्वकामप्र
दायकः ॥ आदिकर्तामहीभर्तासर्वसागरसिंधुजः
॥ ८ ॥ गजगामीगजोद्धारीकामीकामकलानि
धिः ॥ कलंकरहितश्चंद्रोबिंबास्योबिंबसत्तमः ॥
॥ ९ ॥ मालाकारःकृपाकारःकोकिलास्वरभूषणः ॥
रामोनीलांबरोदेवोहलीदुर्दममर्दनः ॥ १० ॥ स
हस्राक्षपुरीभेत्तामहामारीविनाशनः ॥ शिवःशिव
तमोभेत्ताबलारातिप्रपूजकः ॥ ११ ॥ कुमारीवर
दायीचवरेण्योमीनकेतनः ॥ नरोनारायणोधीरो

राधापतिरुदारधीः ॥ १२ ॥ श्रीपतिःश्रीनिधिः
श्रीमान्मापतिःप्रतिराजहा ॥ वृंदापतिःकुलग्रा
मीधामीब्रह्मसनातनः ॥ १३ ॥ रेवतीरमणोरा
मश्चंचलश्चारुलोचनः ॥ रामायणशरीरोयंरामीरा
मःश्रियःपतिः ॥ १४ ॥ शर्वरःशर्वरीशर्वःसर्वत्रशुभ
दायकः ॥ राधाराधायितोराधीराधाचित्तप्रमोदकः
॥ १५ ॥ राधारतिसुखोपेतोराधामोहनतत्परः ॥
राधावशीकरोराधाहृदयांभोजषट्पदः ॥ १६ ॥
राधालिंगनसंमोहोराधानर्तनकौतुकः ॥ राधासं

जातसंप्रीतीराधाकामफलप्रदः ॥ १७ ॥ वृंदाप
तिःकोशनिधिःकोकशोकविनाशकः ॥ चंद्रापति
श्चंद्रपतिश्चंडकोदंडभंजनः ॥ १८ ॥ रामोदाशर
थीरामोभृगुवंशसमुद्भवः ॥ आत्मारामोजितक्रोधो
मोहोमोहांधभंजनः ॥ १९ ॥ वृषभानुर्भवोभावः
काश्यपिःकरुणानिधिः ॥ कोलाहलोहलीहालो
हेलीहलधरप्रियः ॥ २० ॥ राधामुखाब्जमार्तंडो
भास्करोरविजोविधुः ॥ विधिर्विधातावरुणोवारु
णोवारुणीप्रियः ॥ २१ ॥ रोहिणीहृदयानंदीवसु

देवात्मजोबलिः ॥ नीलांबरोरौहिणेयोजरासंध
वधोऽमलः ॥ २२ ॥ नागोनवांभोविरुद्रोवीरहाव
रदोबली ॥ गोपथोविजयीविद्वान् शिपिविष्टःसना
तनः ॥ २३ ॥ पर्शुरामवचोग्राहीवरग्राहीशृगाल
हा ॥ दमघोषोपदेष्टाचरथग्राहीसुदर्शनः ॥ २४ ॥
वीरपत्नीयशस्त्राताजराव्याधिविघातकः ॥ द्वारका
वासतत्त्वज्ञोहुताशनवरप्रदः ॥ २५ ॥ यमुनावेग
संहारीनीलांबरधरःप्रभुः ॥ विभुःशरासनोधन्वी
गणेशोगणनायकः ॥ २६ ॥ लक्ष्मणोलक्षणोल

क्ष्योरक्षोनंशविनाशनः ॥ वामनोवामनीभूतोवम
नोवमनारुहः ॥ २७ ॥ यशोदानंदनःकर्तायमला
र्जुनमुक्तिदः ॥ उलूखलीमहामानीदामबद्धाह्वयी
शमी ॥ २८ ॥ भक्तानुकारीभगवान्केशवोऽचल
धारकः ॥ केशिहामधुहामोहीवृषासुरविघातकः
॥ २९ ॥ अघासुरविनाशीचपूतनामोक्षदायकः ॥
कुब्जाविनोदीभगवान्कंसमृत्युर्महामखी ॥ ३० ॥
अश्वमेधोवाजपेयोगोमेधोनरमेधवान् ॥ कंदर्पको
टिलावण्यश्चंद्रकोटिसुशीतलः ॥ ३१ ॥ रविकोटि

प्रतीकाशोवायुकोटिमहाबलः ॥ ब्रह्माब्रह्मांडकर्ता
चकमलावांछितप्रदः ॥ ३२ ॥ कमलीकमलाक्षश्च
कमलामुखलोलुपः ॥ कमलाव्रतधारीचकमलाभः
पुरंदरः ॥३३॥ सौभाग्याधिकचित्तोयंमहामायीम
होत्कटः ॥ तारकारिःसुरत्रातामारीचक्षोभकारकः
॥३४॥ विश्वामित्रप्रियोदांतोरामोराजीवलोचनः॥
लंकाधिपकुलध्वंसीविभीषणवरप्रदः ॥ ३५ ॥
सीतानंदकरोरामोवीरोवारिधिबंधनः ॥ खरदूषण
संहारीसाकेतपुरवासनः ॥ ३६ ॥ चंद्रावलीपतिःकू

गोपा० ल केशीकंसवधोऽमरः॥ माधवोमधुहामाध्वीमाध्वी
१२॥ कोमाधवोमधुः॥३७॥ मुंजाटवीगाहमानोधेनुका
रिर्धरात्मजः ॥ वंशीवटविहारीचगोवर्धनवनाश्र
यः॥३८॥ तथातालवनोद्देशीभांडीरवनशंखहा॥
तृणावर्तकथाकारीवृषभानुसुतापतिः॥३९॥ राधा
प्राणसमोराधावदनाब्जमधुव्रतः ॥ गोपीरंजनदैव
ज्ञोलीलाकमलपूजितः॥४०॥ क्रीडाकमलसंदोहो
गोपिकाप्रीतिरंजनः ॥ रंजकोरंजनोरंगोरंगीरंग ॥१
महीरुहः॥४१॥ कामःकामारिभक्तोयंपुराणपुरु...

कांचेः ॥ नारदाख्वलोभीमोबालोबालमुखांबुजः ॥
॥ ४२ ॥ अंबुजोब्रह्मसाक्षीचयोगिदत्तवरोमुनिः ॥
ऋषभःपर्वतोग्रामोनदीपवनवल्लभः ॥ ४३ ॥ पद्म
नाभःसुरज्येष्ठोब्रह्मारुद्रोऽहिभूषितः ॥ गणानां
त्राणकर्ताचगणेशोग्रहिलोग्रही ॥ ४४ ॥ गणाश्र
योगणाध्यक्षःक्रोडीकृतजगत्त्रयः ॥ यादवेंद्रोद्धार
केंद्रोमथुरावल्लभोधुरी ॥ ४५ ॥ भ्रमरःकुंतलीकुं
तीसुतरक्षीमहामखी ॥ यमुनावरदाताचकाश्य
पस्यवरप्रदः ॥ ४६ ॥ शंखचूडवधोद्दामोगोपीरक्ष

णतत्पर: ॥ पांचजन्यकरोरामीत्रिरामीवनजोजय:
॥ ४७ ॥ फाल्गुन:फाल्गुनसखोविराधवधकार
क: ॥ रुक्मिणीप्राणनाथश्चसत्यभामाप्रियंकर:
॥ ४८ ॥ कल्पवृक्षोमहावृक्षोदानवृक्षोमहाफल: ॥
अंकुशोभूसुरोभामोभामकोभ्रामकोहरि: ॥ ४९ ॥
सरल:शाश्वतोवीरोयदुवंशीशिवात्मक: ॥ प्रद्युम्नो
बलकर्ताचप्रहर्तादैत्यहाप्रभु: ॥ ५० ॥ महाधनो
महावीरोवनमालाविभूषण: ॥ तुलसीदामशोभा
ढ्योजालंधरविनाशन: ॥ ५१ ॥ शूर:सूर्योमृकंड

श्चभास्करोविश्वपूजितः ॥ रविस्तमोहावह्निश्चवा
डवोवडवानलः ॥ ५२ ॥ दैत्यदर्पविनाशीचगरुडो
गरुडाग्रजः ॥ गोपीनाथोमहीनाथोवृंदानाथोऽव
रोधकः॥ ५३ ॥ प्रपंचीपंचरूपश्चलतागुल्मश्चगो
पतिः ॥ गंगाचयमुनारूपोगोदावेत्रवतीतथा ॥
॥ ५४ ॥ कावेरीनर्मदातापीगंडकीसरयुस्तथा ॥
राजसस्तामसःसत्वीसर्वांगीसर्वलोचनः ॥ ५५ ॥
सुधामयोमृतमयोयोगिनीवल्लभःशिवः ॥ बुद्धोबु
द्धिमतांश्रेष्ठोविष्णुर्जिष्णुःशचीपतिः ॥ ५६ ॥ वशी

पा० वंशधरोलोकोत्रिलोकोमोहनाशनः ॥ स्वरावीरवो
॥४॥ रावोबालोबालवल्लाहकः ॥ ५७ ॥ शिवोरुद्रोन
लोनीलोलांगुलीलांगुलाश्रयः ॥ पारदःपावनोहं
सोहंसारूढोजगत्पतिः ॥ ५८ ॥ मोहिनीमोहनो
मायीमहामायोमहामखः ॥ वृषोवृषाकपिःकालः
कालीदमनकारकः ॥ ५९ ॥ कुब्जाभाग्यप्रदोवी
रोरजकक्षयकारकः ॥ कोमलोवारुणोराजाजलजो
जलधारकः ॥ ६० ॥ हारकःसर्वपापघ्नःपरमेष्ठी
पितामहः ॥ खड्गधारीकृपाकारीराधारमणसुंदरः

॥ ६१ ॥ द्वादशारण्यसंभोगीशेषनागफणालयः ॥
कामःश्यामःसुखःश्रीदःश्रीपतिःश्रीनिधिःकृतिः ॥
॥ ६२ ॥ हरिर्हरोनरोनारोनरोत्तमइषुप्रियः ॥
गोपालीचित्तहर्ताचकर्तासंसारतारकः ॥ ६३ ॥
आदिदेवोमहादेवोगौरीगुरुरनाश्रयः ॥ साधुर्मधु
र्विधुर्धाताभ्राताऽक्रूरपरायणः ॥ ६४ ॥ रोलंबीच
हयग्रीवोवानरारिर्वनाश्रयः ॥ वनंवनीवनाध्यक्षो
महावंद्योमहामुनिः ॥६५॥ स्यमंतकमणिप्राज्ञोवि
ज्ञोविघ्नविघातकः ॥ गोवर्द्धनोवर्द्धनीयोवर्द्धनीवर्द्धन

प्रिय: ॥६६॥ वर्द्धन्योवर्द्धनोवर्द्धीवार्द्धिन्य:सुमुखप्रि
य: ॥ वर्द्धितोवृद्धकोवृद्धोवृंदारकजनप्रिय: ॥६७॥
गोपालरमणीभर्तासांबकुष्ठविनाशन: ॥ रुक्मिणी
हरण:प्रेमप्रेमीचंद्रावलीपति: ॥ ६८ ॥ श्रीकर्ता
विश्वभर्ताचनारायणोनरोबली ॥ गणोगणपतिश्चै
वदत्तात्रेयोमहामुनि: ॥ ६९ ॥ व्यासोनारायणो
दिव्योभव्योभावुकधारक: ॥ श्व:श्रेयसंशिवंभद्रं
भावुकंभविकंशुभं ॥ ७० ॥ शुभात्मक:शुभ:शा
स्ताप्रशास्तामेघनादहा ॥ ब्रह्मण्यदेवोदीनानामु

द्वारकरणक्षमः ॥ ७१ ॥ कृष्णः कमलपत्राक्षः कृष्णः
कमललोचनः ॥ कृष्णः कामी सदा कृष्णः समस्तप्रि
यकारकः ॥ ७२ ॥ नंदो नंदी महानंदी मादी माद
नकः किली ॥ मिली हिली गिली गोली गोलो गोला
लयो गुली ॥ ७३ ॥ गुग्गुली मारकी शाखी वटः
पिप्पलकः कृती ॥ म्लेच्छहा कालहर्ता च यशोदाय
शस्तच ॥ ७४ ॥ अच्युतः केशवो विष्णुर्हरिः सत्यो
जनार्दनः ॥ हंसो नारायणो लीलो नीलो भक्तिपरा
यणः ॥ ७५ ॥ जानकीवल्लभो रामो विरामो विघ्न

नाः ॥ सहस्रांशुर्महाभानुर्वीरबाहुर्महोदधिः
॥ ७६॥ समुद्रोऽब्धिरकूपारः पारावार सरित्पतिः ॥
गोकुलानंदकारीचप्रतिज्ञापरिपालकः ॥ ७७ ॥
सदारामः कृपारामोमहारामोधनुर्धरः ॥ पर्वतः प
र्वताकारोगयोगेयोद्विजप्रियः ॥ ७८ ॥ कंबलाश्व
तरोरामेरामायणप्रवर्तकः ॥ द्योदिवोदिवसोदि
व्योभव्योभाविभयापहः ॥ ७९ ॥ पार्वतीभाग्य
सहितोभ्रातालक्ष्मीविलासवान् ॥ विलासीसाह
सीसर्वीगर्वीगर्वितलोचनः ॥ ८० ॥ मुरारिर्लोक

धर्मज्ञोजीवनोजीवनांतकः ॥ यमोयमादिर्यमनो
यामीयामविधायकः ॥८१॥ वसुली:पांसुली:पांसुः
पांडुरर्जुनवल्लभः ॥ ललिताचंद्रिकामालीमालीमा
लांबुजाश्रयः ॥ ८२ ॥ अंबुजाक्षोमहायक्षोदक्ष
श्चिंतामणिप्रभुः ॥ मणिर्दिनमणिश्चैवकेदारोबद
रीश्रयः ॥ ८३ ॥ बदरीवनसंप्रीतोव्यासःसत्यव
तीसुतः ॥ अमरारिनिहंताचसुधासिंधुर्विधूदयः
॥ ८४ ॥ चंद्रोरविःशिवःशूलीचक्रीचैवगदाधरः॥
श्रीकर्ताश्रीपतिःश्रीदःश्रीदेवोदेवकीसुतः ॥ ८५॥

पा० श्रीपतिःपुंडरीकाक्षःपद्मनाभोजगत्पतिः ॥ वासु सह०
आ० देवोऽप्रमेयात्माकेशवोगरुडध्वजः ॥ ८६ ॥ नारा ३
यणःपरंधामदेवदेवोमहेश्वरः ॥ चक्रपाणिःकला
पूर्णोवेदवेद्योदयानिधिः ॥ ८७ ॥ भगवान्सर्व
भूतेशोगोपालःसर्वपालकः ॥ अनंतोनिर्गुणोऽनं
तोनिर्विकल्पोनिरंजनः ॥ ८८ ॥ निराधारोनिरा
कारोनिराभासोनिराश्रयः ॥ पुरुषःप्रणवातीतो
मुकुंदःपरमेश्वरः ॥ ८९ ॥ क्षणावनिःसार्वभौमोवै ॥१९
कुंठाभक्तवत्सलः ॥ विष्णुर्दामोदरःकृष्णोमाधवो

मथुरापतिः ॥ १० ॥ देवकीगर्भसंभूतोयशोदाव
त्सलोहरिः ॥ शिवःसंकर्षणःशंभुर्भूतनाथोदिवस्प
तिः ॥ ११ ॥ अव्ययःसर्वधर्मज्ञोनिर्मलोनिरुपद्र
वः ॥ निर्वाणनायकोनित्योनीलजीमूतसंनिभः
॥ १२ ॥ कलाक्षयश्चसर्वज्ञःकमलारूपतत्परः ॥
हृषीकेशःपीतवासावसुदेवप्रियात्मजः ॥ १३ ॥ नं
दगोपकुमारार्योनवनीताशनःप्रभुः ॥ पुराणपुरुषः
श्रेष्ठःशंखपाणिःसुविक्रमः ॥ १४ ॥ अनिरुद्धश्च
क्ररथःशार्ङ्गपाणिश्चतुर्भुजः ॥ गदाधरःसुरार्तिघ्नो

गोविंदोनंदकायुधः ॥ १५ ॥ वृंदावनचरश्शौरिर्वे
णुवाद्यविशारदः ॥ तृणावर्तांतकोभीमसाहसोबहु
विक्रमः ॥ १६ ॥ शकटासुरसंहारीबकासुरविना
शनः ॥ धेनुकासुरसंघातःपूतनारिर्नृकेसरी ॥१७॥
पितामहोगुरुःसाक्षीप्रत्यगात्मासदाशिवः ॥ अप्र
मेयप्रभुःप्राज्ञोप्रतर्क्यःस्वप्नवर्द्धनः ॥ १८ ॥ धन्यो
मान्योभवोभावोधीरःशांतोजगद्गुरुः ॥ अंतर्यामी
श्वरोदिव्योदैवज्ञोदेवतागुरुः ॥ १९ ॥ क्षीराब्धि
शयनोधातालक्ष्मीवाँल्लक्ष्मणाग्रजः ॥ धात्रीपति

रमेयात्माचंद्रशेखरपूजितः ॥ १०० ॥ लोकसाक्षी
जगच्चक्षुःपुण्यचारित्रकीर्तनः ॥ कोटिमन्मथसौंद
र्योजगन्मोहनविग्रहः ॥ १ ॥ मंदस्मिततमोगोपो
गोपिकापरिवेष्टितः ॥ फुल्लारविंदनयनश्चाणूरांध्र
निषूदनः ॥ २ ॥ इंदीवरदलश्यामोबर्हिबर्हावतं
सकः ॥ मुरलीनिनदाह्लादोदिव्यमाल्योवराश्रयः
॥ ३ ॥ सुकपोलयुगःसुभ्रूयुगलःसुललाटकः ॥
कंबुग्रीवोविशालाक्षोलक्ष्मीवान्शुभलक्षणः ॥ ४ ॥
पीनवक्षाश्चतुर्बाहुश्चतुर्मूर्तिस्त्रिविक्रमः ॥ कलंकर

हितःगुह्योदुष्टशत्रुनिवर्हणः ॥ ५ ॥ किरीटकुंडल
धरःकटकांगदमंडितः ॥ मुद्रिकाभरणोपेतःकटि
सूत्रविराजितः ॥ ६ ॥ मंजीररंजितपदःसर्वाभर
णभूषितः ॥ विन्यस्तपादयुगलोदिव्यमंगलविग्र
हः ॥ ७ ॥ गोपिकानयनानंदःपूर्णचंद्रनिभाननः ॥
समस्तजगदानंदःसुंदरोलोकनंदनः ॥ ८ ॥ यमु
नातीरसंचारीराधामन्मथवैभवः ॥ गोपनारीप्रि
योदांतोगोपीवस्त्रापहारकः ॥ ९ ॥ शृंगारमूर्तिः
श्रीधामातारकोम[illegible] ॥ [illegible]

क्रूरासुरविभंजनः ॥१०॥ नरकासुरहारीचमुरारिर्वै
रिमर्दनः ॥ आदितेर्नाभियोदैत्यभीकरश्चेंदुशेख
रः ॥ ११ ॥ जरासंधकुलध्वंसीकंसारातिःसुवि
क्रमः ॥ पुण्यश्लोकःकीर्तनीयोयादवेंद्रोजगन्नुतः
॥ १२ ॥ रुक्मिणीरमणःसत्यभामाजांबवतीप्रि
यः ॥ मित्रविंदानाग्नजितीलक्ष्मणासमुपासितः
॥ १३ ॥ सुधाकरकुलेजातोऽनंतप्रबलविक्रमः ॥
सर्वसौभाग्यसंपन्नोद्वारकायामुपस्थितः ॥ १४ ॥
भद्रासूर्यसुतानाथोलीलामानुषविग्रहः ॥ सहस्र

षोडशस्त्रीशोभोगमोक्षैकदायकः ॥ १५ ॥ वेदांत
वेद्यःसंवेद्योवैधब्रह्मांडनायकः ॥ गोवर्धनधरोना
थः सर्वजीवदयापरः ॥ १६ ॥ मूर्तिमान्सर्वभूता
त्माआर्तत्राणपरायणः ॥ सर्वज्ञःसर्वसुलभःसर्व
शास्त्रविशारदः ॥ १७ ॥ षड्गुणैश्वर्यसंपन्नःपूर्ण
कामोधुरंधरः ॥ महानुभावः कैवल्यदायकोलोक
नायकः ॥ १८ ॥ आदिमध्यांतरहितःशुद्धसात्वि
कविग्रहः ॥ असमानसमस्त्रात्माशरणागतवत्स

21

ल:॥१९॥ उत्पत्तिस्थितिसंहारकारणंसर्वकारणम्॥
गंभीरःसर्वभावज्ञःसच्चिदानंदविग्रहः॥२०॥ विष्व
क्सेनःसत्यसंधःसत्यवान्सत्यविक्रमः ॥ सत्यव्र
तःसत्यसंज्ञःसर्वधर्मपरायणः॥ २१ ॥ आपन्ना
र्तिप्रशमनोद्रौपदीमानरक्षकः ॥ कंदर्पजनकःप्रा
ज्ञोजगन्नाटकवैभवः ॥ २२ ॥ भक्तिवश्योगुणाती
तःसर्वैश्वर्यप्रदायकः ॥ दमघोषसुतद्वेषीबाणबाहु
विखंडनः ॥ २३ ॥ भीष्मभक्तिप्रदोदिव्यःकौरवा
न्वयनाशनः ॥ कौंतेयप्रियबंधुश्चपार्थस्यंदनसार

गोपा० थिः ॥ २४ ॥ नारसिंहोमहावीरस्तंभजातोमहा सह०
॥२१॥ बलः॥ प्रल्हादवरदःसत्योदेवपूज्योभयंकरः॥२५॥ ३
उपेंद्रइंद्रावरजोवामनोबलिबंधनः ॥ गजेंद्रवरदः
स्वामीसर्वदेवनमस्कृतः ॥ २६ ॥ शेषपर्यंकशयनो
वैनतेयरथोजयी ॥ अव्याहतबलैश्वर्यसंपन्नःपूर्ण
मानसः ॥ २७ ॥ योगेश्वरेश्वरःसाक्षीक्षेत्रज्ञोज्ञान
दायकः॥ योगिहृत्पंकजावासोयोगमायासमन्वि
तः ॥२८ ॥ नादबिंदुकलातीतश्चतुर्वर्गफलप्रदः॥ ॥२१
सुषुम्नामार्गसंचारीदेहस्यांतरसंस्थितः ॥ २९ ॥ दे

हृषीकेशः समनःप्राणसाक्षीचेतःप्रसादकः ॥ सूक्ष्मःसर्वगतोदेहीज्ञानदर्पणगोचरः ॥ ३० ॥ तत्त्वत्रयात्मकोऽव्यक्तःकुंडलीसमुपाश्रितः ॥ ब्रह्मण्यःसर्वधर्मज्ञःशांतोदांतोगतक्लमः ॥ ३१ ॥ श्रीनिवासःसदानंदीविश्वमूर्तिर्महाप्रभुः ॥ सहस्रशीर्षापुरुषःसहस्राक्षःसहस्रपात् ॥ ३२ ॥ समस्तभुवनाधारःसमस्तप्राणरक्षकः ॥ समस्तसर्वभावज्ञागोपिकाप्राणवल्लभः ॥ ३३ ॥ नित्योत्सवोनित्यसौख्योनित्यश्रीर्नित्यमंगलः ॥ व्यूहार्चितोजगन्नाथःश्री

गोपा० वैकुंठपुराधिपः ॥ ३४ ॥ पूर्णानंदघनीभूतोगोपवे सह०
पधरोहरिः ॥ कलापकुसुमश्यामःकोमलःशांतवि ३
॥२२॥ ग्रहः ॥ ३५ ॥ गोपांगनावृतोऽनंतोवृंदावनसमा
श्रयः ॥ वेणुवादरतःश्रेष्ठोदेवानांहितकारकः
॥ ३६ ॥ बालक्रीडासमासक्तोनवनीतस्यतस्करः
॥ गोपालकामिनीजारश्चौरजारशिखामणिः ॥
॥ ३७ ॥ परंज्योतिःपराकाशःपरवासःपरिस्फुटः॥
अष्टादशाक्षरोमंत्रोव्यापकोलोकपावनः ॥ ३८ ॥ ॥२२॥
सप्तकोटिमहामंत्रशेखरोदेवशेखरः ॥ विज्ञानज्ञा

नसंधानस्तेजोराशिर्जगत्पतिः ॥ ३९ ॥ भक्तलो
कप्रसन्नात्माभक्तमंदारविग्रहः ॥ भक्तदारिद्र्यदम
नोभक्तानांप्रीतिदायकः ॥ ४० ॥ भक्ताधीनमनाः
पूज्योभक्तलोकशिवंकरः ॥ भक्ताभीष्टप्रदःसर्वभ
क्ताघौघनिकृंतनः ॥ ४१ ॥ अपारकरुणासिंधुर्भ
गवान्भक्ततत्परः ॥ ४२ ॥ इतिश्रीराधिकानाथ
सहस्त्रनामकीर्तितम् ॥ स्मरणात्पापराशीनांखंडनं
मृत्युनाशनम् ॥ १ ॥ वैष्णवानांप्रियकरंमहारोग
निवारणम् ॥ ब्रह्महत्यासुरापानंपरस्त्रीगमनंतथा

॥ २ ॥ परद्रव्यापहरणंपरद्वेषसमन्वितम् ॥ मान
संवाचिकंकायंयत्पापंपापसंभवम् ॥ ३ ॥ सहस्रना
मपठनात्सर्वंनश्यतितत्क्षणात् ॥ महादारिद्र्ययु
क्तोयोवैष्णवोविष्णुभक्तिमान् ॥ ४ ॥ कार्तिक्यां
संपठेद्रात्रौशतमष्टोत्तरंक्रमात् ॥ पीतांबरधरो
धीमान्सुगंधिपुष्पचंदनैः ॥ ५ ॥ पुस्तकंपूजयि
त्वातुनैवेद्यादिभिरेवच ॥ राधाध्यानांकितोधीरोव
नमालाविभूषितः ॥ ६ ॥ शतमष्टोत्तरंदेविपठेन्नाम
सहस्रकम् ॥ चैत्रशुक्लेचकृष्णेचकुहूसंक्रांतिवासरे

॥ ७ ॥ पठितव्यंप्रयत्नेनत्रैलोक्यंमोहयेत्क्षणात्
॥ तुलसीमालयायुक्तोवैष्णवोभक्तितत्परः ॥ ८ ॥
रविवारेचशुक्रेचद्वादश्यांश्राद्धवासरे ॥ ब्राह्मणंपू
जयित्वाचभोजयित्वाविधानतः ॥ ९ ॥ पठेन्नाम
सहस्रंचततःसिद्धिःप्रजायते ॥ महानिशायांसततं
वैष्णवोयःपठेत्सदा ॥ १० ॥ देशांतरगतालक्ष्मीः
समायातिनसंशयः ॥ त्रैलोक्येचमहादेविसुंदर्यः
काममोहिताः ॥ ११ ॥ मुग्धाःस्वयंसमायांतिवै
ष्णवंचभजंतिताः ॥ रोगीरोगात्प्रमुच्येतबद्धोमुच्ये

गोपा० नवंधनात् ॥ १२ ॥ गुर्विणीजनयेत्पुत्रंकन्याविंद सह०
।२४।। तिसत्पतिम् ॥ राजानोवश्यतांयांतिकिंपुनःक्षुद्रमा ३
नवाः ॥१३॥ सहस्रनामश्रवणात्पठनात्पूजनात्प्रि
ये ॥धारणात्सर्वमाप्नोतिवैष्णवोनात्रसंशयः॥१४॥
वंशीवटेचान्यवटेतथापिप्पलकेथवा ॥ कदंबपाद
पतलेगोपालमूर्तिसान्निधौ ॥ १५ ॥ यःपठेद्वैष्ण
वोनित्यंसयातिहरिमंदिरम्॥ कृष्णेनोक्तंराधिकायै
मयिप्रोक्तंपुराशिवे ॥ १६ ॥ नारदायमयाप्रोक्तंना ।।२४।
रदेनप्रकाशितम्॥मयात्वयिवरारोहेप्रोक्तमेतत्सुदु

र्लभम ॥ १७ ॥ गोपनीयंप्रयत्नेननप्रकाश्यंकथंच
न ॥ शठायपापिनेचैवलंपटायविशेषतः ॥१८॥ न
दातव्यंनदातव्यंनदातव्यंकदाचन ॥ देयंशिष्याय
शांतायविष्णुभक्तिरतायच ॥ १९ ॥ गोदानब्रह्म
यज्ञादेर्वाजपेयशतस्यच ॥ अश्वमेधसहस्रस्यफ
लंपाठेभवेद्ध्रुवम ॥ २० ॥ मोहनंस्तंभनंचैवमारणो
च्चाटनादिकम् ॥ यद्यद्वांछतिचित्तेनतत्तत्प्राप्नोतिवै
ष्णवः ॥ २१ ॥ एकादश्यांनरःस्नात्वासुगंधिद्रव्य
तैलकैः ॥ आहारंब्राह्मणेदत्वादक्षिणांस्वर्णभूषण

म्॥२२॥ ततआरंभकर्त्तासौसर्वंप्राप्नोतिमानवः ॥ 
शतावृत्तंसहस्रंचयःपठेद्वैष्णवोजनः ॥ २३ ॥ श्री
वृंदावनचंद्रस्यप्रसादात्सर्वमाप्नुयात् ॥ यद्गृहेपुस्त
कंदेविपूजितंचैवतिष्ठति ॥ २४ ॥ नमारीनचदु
र्भिक्षंनोपसर्गभयंक्वचित् ॥ सर्पादिभूतयक्षाद्यान
श्यंतिनात्रसंशयः ॥ २५ ॥ श्रीगोपालोमहादेवि
वसेत्तस्यगृहेसदा ॥ गृहेयत्रसहस्रंचनाम्नांतिष्ठ
तिपूजितम् ॥ २६ ॥ इतिश्रीसंमोहनतंत्रेपार्वती
श्वरसंवादेश्रीगोपालसहस्रनामस्तोत्रंसंपूर्णम् ॥

श्रीराधारमणायनमः ॥ श्रीसनत्कुमार उवाच ॥
ब्रूहिमेकवचंब्रह्मनजगन्मंगलमंगलम्॥ पूज्यंपुण्य
स्वरूपंचकृष्णस्यपरमात्मनः १॥ ब्रह्मोवाच ॥ शृणु
वक्ष्यामिविप्रेन्द्रकवचंपरमाद्भुतम् ॥ श्रीकृष्णेनैव
कथितंमह्यंचकृपयापुरा ॥ २ ॥ मयादत्तंचधर्माय
तेननारायणर्षये ॥ ऋषिणातेनतद्दत्तंसुभद्रायमहा
त्मने ॥ ३ ॥ अनिरुद्धायमंशुद्धंपरंस्नेहाद्ददाम्य
हम्॥ यद्धृत्वापठनात्सिद्धाःसिद्धयःसिद्धिमाप्नुवन्तिच
॥ ४ ॥ एवमिन्द्रादयःसर्वेसर्वैश्वर्यमवाप्नुयुः ॥ ऋ

षिश्छन्दश्चसावित्रीदेवोनारायणःस्वयम् ॥ ५ ॥
धर्मार्थकाममोक्षेषुविनियोगःप्रकीर्तितः ॥ ॐ रा
॥२६॥ धेशोमेशिरःपातुकंठंराधेश्वरःस्वयम् ॥ ६ ॥ गोपी
शश्चक्षुषीपातुतालुंचभगवान्स्वयम् ॥ गंडयुग्मं
चगोविंदःकर्णयुग्मंचकेशवः ॥ ७ ॥ गलंगदाधरः
पातुस्कन्धंकृष्णःस्वयंप्रभुः ॥ वक्षःस्थलंवासुदेव
श्चोदरंचापिसोऽच्युतः ॥ ८ ॥ नाभिंपातुपद्मनाभः
कंकालंकंससूदनः ॥ पुरुषोत्तमःपातुपृष्ठंनित्यान ॥२६॥
न्दोनितंबकम् ॥ ९ ॥ पुण्डरीकःपादयुग्मंहस्तयु

र्ग्महारः स्वयम् ॥ नासांचनग्वरंपातुनरसिंह स्वयं
प्रभुः ॥१०॥ सर्वेश्वरश्चसर्वांगं संततंमधुसूदनः ॥
प्राच्यांपातुचरामश्चवन्हौवंशीधरःस्वयम् ॥११॥
पातुदामोदरोदक्षेनैर्ऋतेचनरोत्तमः ॥ पश्चिमेपुंड
रीकाक्षोवायव्यांवामनःस्वयम् ॥१२॥ अनन्तश्चो
त्तरेपातुऐशान्यांमीश्वरःस्वयम् ॥ जलस्थलेचान्त
रिक्षेस्वप्नेजागरणेतथा ॥१३॥ पातुकृष्णोनिशं
श्चमांभक्तंशरणागतम् ॥ इतितेकथितंवत्सकवचं
परमाद्भुतम् ॥१४॥ सुवर्णमालदसार[illegible]

प्रदंसताम् ॥ इदंकवचमिष्टंचपु त्रिकालेचयःपठेत्
॥ १५ ॥ हरिदास्यमवाप्नोतिगोलोकेवासमुत्तम
म् ॥ इहैवहरिभक्तिंचजीवन्मुक्तोभवेन्नरः ॥ १६ ॥
इतिश्रीनारदपंचरात्रे ज्ञानामृतसारे प्रथमैकरात्रे
ब्रह्मनारदसंवादे जगन्मंगलकवचं समाप्तम् ॥

श्रीगोपालकृष्णायनमः ॥ श्रीमहादेवउवाच ॥
श्रृणुदेविप्रवक्ष्यामिभुक्तिमुक्तिप्रसाधनम् ॥ नाम्ना
मष्टोत्तरशतंकृष्णस्यपरमात्मनः ॥ १ ॥ पूर्वकल्पे 

धरोद्धारेपृथिव्याशेषकेणच ॥ संवादंपरमाश्चर्यं
शृणुष्वकमलानने ॥ २ ॥ नातःपरतरंस्तोत्रंनातः
परतरंतपः ॥ नातःपरतराविद्यातीर्थंनातःपरंपरम्
॥ ३ ॥ वेदानांचयथामातानीर्थानांमथुरापरा ॥
क्षेत्राणांकाशिकादेवीमन्त्राणांश्रीदशाक्षरः ॥ ४ ॥
वैष्णवानांवैष्णवीनांयथाहंत्वंतथापरा ॥ आश्रमा
णांयथान्यासःसिद्धानांकपिलोयथा ॥ ५ ॥ आ
युधानांयथावज्रंधेनूनांकामधुग्यथा ॥ मनोरथंप्र
त्रवतांयथानाम्नांशतारकम् ॥ ६ ॥ ततोऽहंसंप्र

वक्ष्यामिसावधानावधारय ॥ प्रणम्यवसुधादेवी
शेषसंकर्षणात्मकम् ॥ ७ ॥ प्रपच्छपरयाभक्त्या
जनानांमुक्तिहेतवे ॥ नाम्नामष्टोत्तरशतंश्रीकृष्ण
स्यरमापतेः ॥ ८ ॥ भूमिरुवाच ॥ कृष्णावतारे
रोहिण्यारामेणापित्वयासह ॥ अलंकृतंजन्मपुंसा
मपिवृन्दावनौकसाम् ॥ ९ ॥ तस्यदेवस्यकृष्णस्य
लीलाविग्रहधारिणः ॥ यस्योपाधिनियुक्तानिस
न्तिनामान्यनेकशः ॥ १० ॥ तेषुमुख्यानिनामा ॥२८
निश्रोतुकामाचिरादहम् ॥ सद्गुणात्मनःस्तोत्रं

यतोजानासिवाङ्मयम् ॥ ११ ॥ ततानिषाम्नि
नामानिवासुदेवस्यवासुके ॥ नातःपरतरंस्तोत्रंत्रि
पुण्यंकपुविद्यते ॥ १२ ॥ श्रीशेषउवाच ॥ वसु
न्धरेवरारोहेजनानामन्तिमुक्तिदम् ॥ सर्वमङ्गल
मूर्धन्यमणिमाद्यासिद्धिदम् ॥ १३ ॥ महापात
ककोटिघ्नंसर्वतीर्थफलप्रदम् ॥ समस्तजपयज्ञानां
फलदंपापनाशनम् ॥ १४ ॥ शृणुदेविप्रवक्ष्यामि
नाम्नामष्टोत्तरशतम् ॥ सहस्रनाम्नांपुण्यानांत्रि
रावृत्त्यातुयत्फलम् ॥ १५ ॥ एकावृत्त्यातुकृष्णस्य

 



नामैकंतत्प्रयच्छति ॥ तस्मात्पुण्यतमंचैतत्स्तोत्रं
पापप्रणाशनम् ॥ १६ ॥ ॐ अस्यश्रीकृष्णाष्टो
त्तरशतनामस्तोत्रस्य ॥ श्रीशेषऋषिः ॥ अनुष्टुप्
छन्दः ॥ श्रीकृष्णोदेवता ॥ श्रीकृष्णाष्टोत्तरशतनाम
जपेविनियोगः ॥ ॐ श्रीकृष्णःकमलानाथोवासुदे
वःसनातनः ॥ वसुदेवात्मजःपुण्योलीलामानुषविग्र
हः ॥ १७ ॥ श्रीवत्सकौस्तुभधरोयशोदावत्सलो
हरिः ॥ चतुर्भुजात्तचक्रासिगदाशंखाम्बुजायुधः
॥१८॥ देवकीनन्दनःश्रीशोनन्दगोपप्रियात्मजः ॥

यमुनावेगसंहारीबलभद्रप्रियानुजः ॥ १९ ॥ पूत
नाजीवितहरःशकटासुरभंजनः ॥ नन्दव्रजजनान
न्दीसच्चिदानन्दविग्रहः ॥ २० ॥ नवनीतनवाहा
रीमुचुकुन्दप्रसादकः ॥ षोडशस्त्रीसहस्रेशस्त्रिभङ्गी
मधुराकृतिः ॥ २१ ॥ शुकवागमृताब्धीन्दुर्गोवि
न्दोगोविदांपतिः ॥ वत्सपालनसंचारीधेनुकासुर
भंजनः ॥ २२ ॥ तृणीकृततृणावर्तोयमलार्जुनभं
जनः ॥ उत्तानतालभेत्ताचतमालश्यामलाकृतिः
॥ २३ ॥ गोपगोपीश्वरोयोगीसूर्यकोटिसमप्रभः ॥

गोपा० ॥ ३० ॥

…लापति… ज्योतिर्यादवेन्द्रोयदूद्वहः ॥ २४ ॥
वनमालीपीतवासाःपारिजातापहारकः ॥ गोवर्ध
नाचलोद्धर्त्तागोपालःसर्वपालकः ॥ २५ ॥ अजो
निरंजनःकामजनकःकंजलोचनः ॥ मधुहामथुरा
नाथोद्वारकानायकोबली ॥ २६ ॥ वृन्दावनान्त
संचारीतुलसीदामभूषणः ॥ स्यमन्तकमणेर्हर्ता
नरनारायणात्मकः ॥ २७ ॥ कुब्जाकृष्णाम्बरधरो
मायीपरमपूरुषः ॥ मुष्टिकासुरचाणूरमहायुद्धवि
शारदः ॥ २८ ॥ संसारवैरी कंसारिर्मुरारिर्नरका

॥ ३०

न्तकः ॥ अनादिब्रह्मचारी ... नकुपकः ॥२९॥ शिशुपालशिरश्छेत्ता दु... कुलान्तकृत् ॥ विदुराक्रूरवरदो विश्वरूपप्रदर्शकः ॥ ३० ॥ सत्यवाक् सत्यसंकल्पः सत्यभामारतो जयी ॥ सुभद्रापूर्वजो विष्णुर्भीष्ममुक्तिप्रदायकः ॥ ३१ ॥ जगद्गुरुर्जगन्नाथो वेणुनादविशारदः ॥ वृषभासुरविध्वंसी बाणासुरकरान्तकृत् ॥ ३२ ॥ युधिष्ठिरप्रतिष्ठाता बर्हिबर्हावतंसकः ॥ पार्थसारथिरव्यक्तो गीतामृतमहोदधिः ॥३३॥ कालीयफणिमाणिक्यरंजितश्री

पदाम्बुजः ॥ दामोदरोयज्ञभोक्तादानवेन्द्रविना
शनः ॥ ३४ ॥ नारायणःपरंब्रह्मपन्नगाशनवाह
नः ॥ जलक्रीडासमासक्तगोपीवस्त्रापहारकः ॥
॥३५॥ पुण्यश्लोकस्तीर्थकरोवेदविद्यादयानिधिः ॥
सर्वतीर्थात्मकःसर्वग्रहरूपीपरात्परः ॥ ३६ ॥ इ
त्येवंकृष्णदेवस्यनाम्नामष्टोत्तरंशतम् ॥ कृष्णेन
कृष्णभक्तेनश्रुत्वागीतामृतंपुरा ॥ ३७ ॥ स्तोत्रं
कृष्णप्रियकरंकृतंतस्मान्मयापरम् ॥ कृष्णनामा ॥३
मृतंनाम परमानन्ददायकम् ॥ ३८ ॥ अनुपद्रव

रमायुष्यवर्द्धनम् ॥ दानश्रुततपस्तीर्थय
ज्ञं त्विहजन्मनि ॥ ३९ ॥ पठतांशृण्वतांचैवको
टिकोटिगुणंभवेत् ॥ पुत्रप्रदमपुत्राणामगतीनांग
तिप्रदम् ॥ ४० ॥ धनावहंदरिद्राणांजयेच्छूनांज
यावहम् ॥ शिशूनांगोकुलानांचपुष्टिदंपुष्टिवर्धनम्
॥ ४१ ॥ वातग्रहज्वरादीनांशमनंशान्तिमुक्तिद
म् ॥ समस्तकामदंसद्यःकोटिजन्माघनाशनम् ॥
अन्तेकृष्णस्मरणदंभवतापभयापहम् ॥ ४२ ॥
कृष्णाययादवेन्द्रायज्ञानमुद्राययोगिने ॥ नाथाय

32

रुक्मिणीशायनमोवेदान्तवेदिने ॥४३॥ इमंमंत्रंम
हादेविजपन्नेवदिवानिशम्॥ सर्वग्रहानुग्रहभाक्स
र्वप्रियतमोभवेत् ॥ ४४ ॥ पुत्रपौत्रैःपरिवृतःसर्वसि
द्धिसमृद्धिमान् ॥ निर्विश्यभोगानन्तेऽपिकृष्णसा
युज्यमाप्नुयात् ॥४५॥ इति श्रीनारदपंचरात्रे ज्ञाना
मृतसारे चतुर्थरात्रे उमामहेश्वरसंवादे धरणीशेष
संवादे श्रीकृष्णाष्टोत्तरशतनामस्तोत्रं समाप्तम् ॥

इदं पुस्तकं मुम्बापुर्यां निर्णयसागराख्य मुद्रणयंत्रालये
[illegible] मुद्रितम् ॥ शकाब्दाः [illegible] ॥